## मुखदौर्गन्ध्यहरी गुटिका

जातिफलजातिपत्रावालैलामुस्तयष्टीभिः ।
अपहरति पूतिगन्धं गुटिका विहिता मुखन्यस्ता ॥ १५ ॥

जायफल, जावित्री, सुगंधवाला, छोटी इलायची, नागरमोथा, तथा मुलहठी, इन औषधियों को समान परिमाण में लेकर यथाविधि कूट कर पानी से गोलियां बनाले। इस गोली को मुख में रखने से मुख की दुर्गंध दूर होजाती है ॥ १५ ॥

## गात्रदौर्गन्ध्यहरो लेपः—

मलयजबालकजलधरजम्बूदललोध्रधान्यकैस्तुलितैः ।
लेपः सकृदपि विहितः प्रचुरं तनुगन्धमपनयति ॥ १६ ॥

चन्दन, सुगंधवाला, नागरमोथा, जामुन के पत्र, लोध, तथा धनियां, इन औषधियों को समान परिमाण में लेकर पानी से पीसकर लेप करने से एक बार में ही शरीर की दुर्गंध दूर हो जाती है ॥ १६ ॥

## मलवातहरं चूर्णम्

या प्रदोषसमये मधुमिश्रं बीजपूरकदलोद्भवचूर्णम्।
स्वादयत्युपहता न भवेत्सा पूत्यधः पवननिर्गमवेगैः ॥ १७ ॥

बिजौरे के पत्तों के चूर्ण को शहद के साथ मिलाकर जो स्त्री प्रदोषसमय में खाती है, वह दुर्गन्धित अधोवायु को नहीं छोड़ती ॥ १७ ॥

## चूर्णदग्धप्रतिक्रिया—

ताम्बूलमध्यस्थित चूर्णकेन
दग्धं मुखं यस्य भवेत्कदाचित्।
तैलेन गण्डूषमसौ विदध्या-
दथारनालेन पुनःपुनः नवा ॥ १८ ॥

जिस पुरुष का मुख ताम्बूल मध्यगत चूने के आधिक्य के कारण जल गया हो, वह तेल से अथवा कांजी से गण्डूस धारण करे। शीघ्र ही अच्छा हो जायगा ॥

## जात्यादिगुटिका—

जातीकर्पूरपूगानि कक्कोलकफलानि च ।
इत्येषा गुटिका कार्या मुखसौभाग्यवर्द्धिनी ॥ १९ ॥

चमेली, कपूर, सुपारी, तथा शीतल चीनी इन औषधियों को समान परिमाण में लेकर यथाविधि गुटिका बनाले । इस को मुख में रखने से मुख दौर्गन्ध्य दूर होता है ॥ १९ ॥

## जातिपत्र्यादिलेहः—

जातीपत्री कणा यष्टी मातुलुङ्गदलं मधु ।
एला लेहं भवेन्नादः किन्नरस्वरतोऽधिकः ॥ २० ॥

जावित्री, पिप्पली, मुलहठी, मातुलुङ्ग के पत्र, तथा छोटी इलायची इन को समान परिमाण में लेकर यथाविधि चूर्ण बनाले । इस चूर्ण को शहद के साथ मिलाकर लेहन करने से किन्नरों के स्वर से भी अधिक मधुर स्वर होजाता है ॥ २१ ॥

## मशकप्रतिक्रिया -

धात्तारिपत्रवृन्तप्रान्तेनादाय चूर्णकं बहुशः ।
घृष्टस्तेन तु मशकः प्रस्रुतरुधिरः शमं याति ॥ २२ ॥

एरण्ड के पत्ते के वृन्त के अग्रभाग में चूना लेकर मशक को अवघर्षित करे । इस प्रकार घर्षण करने से मशक में से खून निकल कर वह नष्ट होजाता है ॥ २२ ॥

## व्यङ्गहरो लेपः—

रक्तचन्दनमञ्जिष्ठाकुष्ठरोध्रप्रियङ्गवः ।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ २३ ॥

लालचन्दन, मंजीठ, लोध, प्रियंगु, वट के अंकुर, तथा मसूर इन औषधियों को पानी में पीसकर लेप करने से व्यङ्ग दूर होकर मुख पर चमक आजाती है ॥२३॥

## यौवनपिटिकाहरो योगः—

सिद्धार्थकवचारोध्रसैन्धवैश्च प्रलेपनम् ।
विहितं विनिहन्त्याशु पिटिका यौवनोद्भवाः ॥ २४ ॥

सरसों, वच, लोध, तथा सेंधानमक इन को लेकर पानी से लेप करने से मुखगत यौवनपिटिकाए ( जवानी की फुन्सियां ) दूर होजाती हैं ॥ २४ ॥

## नीलिकाहरो लेपः—

जातीफलस्य लेपस्तु हरेद् व्यङ्गं च नीलिकाम् ।
मञ्जिष्ठाजातिपत्रीभ्यां लेपो वा वचयान्वितः ॥ २५ ॥

जायफल को, अथवा मंजीठ, वच, तथा जावित्री को पीस कर लेप करने से मुखगत नीलिका दूर होजाती है ॥ २५ ॥

### मुखकाण्ण्यहरो लेपः—

अर्कक्षीरहरिद्राभ्यां मर्दयित्वा प्रलेपयेत् ।
मुखकाण्ण्यं शमं याति चिरकालोद्भवं ध्रुवम् ॥ २६ ॥

हलदी के चूर्ण को आंक के दूध के साथ पीसकर लगाने से मुख की कृष्णता दूर होजाती है ॥ २६ ॥

### गात्रकाण्ण्यहरः परिषेकः—

या कुष्ठसर्षपतिलैर्निशया च दार्व्या,
गात्रं प्रलिप्य सलिलैः कुरुतेऽभिषेकम् ।
तस्याः प्रतप्तवरकाञ्चनकान्तिगौरं
गात्रं भवेद्विगतकाण्ण्यमतीव रम्यम् ॥ २७ ॥

कूठ, सरसों, तिल, हलदी, तथा दारुहलदी, इन औषधियों के उबटने से शरीर को प्रलिप्त, तथा परिमर्दित करके जो स्त्री प्रतिदिन स्नान करती है, उस के शरीर तपेहुए सोने के समान चमक आजाती है, और शरीर की कालिमा दूर होकर रमणीय होजाता है ॥ २७ ॥

### प्रतिसंस्कारसमाप्ति कालः

( गीतिः )

नयनेभनन्दचन्द्र प्रमिते तु विक्रमाब्दे ।
असिते च माघमासे शिवरात्रिकानिशायाम् ॥ २८ ॥
नवनावनीतकस्य प्रतिसंस्कृतिः समाप्ता ।
भिषजां भवत्प्रसादादविकाय बोभवीतु ॥ २६ ॥

इति गढपालमण्डलान्तर्गतश्रीनगरनिकटवर्तिखोलाख्य-
ग्रामवास्तव्येन सदानन्द शर्म्मणा प्रतिसंस्कृते नव-
नावनीतके सुभगाचिकित्सितविज्ञानीयो नाम
षोडशोऽध्यायः ॥
समाप्तं चेदं नवनावनीतकम् ॥

विक्रम संवत् १६८२ के माघ महीने के कृष्णपक्ष की शिवरात्रि तिथि की रात्रि में नावनीतक का समाप्त कियाहुआ यह "नवनावनीतक नामक" प्रतिसंस्कार शिवजी की कृपा से वैद्यों का मङ्गलकारी हो ॥ २८—२६ ॥

इति शारदीपिकाख्यायां हिन्दीभाषाव्याख्यायां
षोडशोऽध्यायः।

# अत्युपयोगी वैद्यक पुस्तकें !